BHAVAN'S LIBRARY

This book is valuable and
NOT to be ISSUED
out of the Library
without Special Permission

...कशंप्रभुं
...ादिका-
[illegible] ब्राह्मणां
स्तद्बोधाय विवाहपद्धतिरियं संगृह्यलिप्ताक्रमात्
॥१॥ तांसंवीक्ष्यधरामराः प्रमुदिताउद्वाहकार्ये
सदा संस्काराननुकारयंतु सततंगार्हस्थ्य सौख्य
द्धये।वर्ततांशुभकर्मणीहनिखिलाःसत्कर्मकर्तृगणा
सत्पात्रेषुच दानकर्मनिरताः सत्कीर्तिभाजःसदार
नानाग्रंथसमाश्रयात्सुलिखिताकार्यक्रमोद्बोधिनी
स्यादेषाविदुषां प्रमोदानिवहा सत् [illegible]
[illegible]
स्तुपरोपकारमहती वृद्धिःप्रतिष्ठात्मिका॥२॥

निवेदको

दयालुचंद्र शर्मा

# विवाहे ग्रह मण्डल चित्रम्

पूर्व

पुरोहित पढने वाले आदि का आसन

ई० ३० — पू० ३२ — ई० — २३

कलश ६

१७

अष्टजीव १९

१९ २० २१ ब्र० वि० म०

योगिनी २२

४ वेद १५

बु० ५

गु० ११

चं० ७

सर्प ५

४ सप्तऋषि

बृ० १०

सूर्य० ६

मं० ८

३

१४ के० ४

श० १२

रा० १३

गणेश १

ओं ओं ओं ओं ओं २

दीपक धूप

कन्यादाताआसन

वा० २८ — व० २७ (पश्चिम) — अग्नि० २५ — नै० २६

वर का आसन

वधू का आसन

स्त्रियों के बैठने का स्थान

ग्रहनम्बर

१।८।२४

२।६।१५।२५।३४

११।२८।३२।

४।१०।२०।२३।२७।३३

५।२६

१२।१३।१४।२४।३१

३।५।१५।२६।२७।१८

मकरण         ७।२२।३०

नोट

हमनें स्वदेशानुसार दिया है, विद्वान् लोग
ाधा विचार करके मंडल वेदी आदि
ुसार बना लेंगें-

निवेद ·
पं० दयालुचंद्र शर्मा काष्टपाल
वैया जिला मुजफर गढ़

जुन्कारप्रेसलाहौर

# भूमिका

श्रीमदानन्दकन्द व्रजचन्द श्रीकृष्णचन्द्र जीके चरणकमलों में नमस्कार के अनंतर कोटिशः उनका धन्यवाद किया जाता है कि जिनकी असीम कृपासे मेरासंकल्पित मनोरथ बहुत दिनोंके अनंतर आज पूराहुआ मेराजो मनोरथ था, कि एक ऐसा पुस्तक लिखा जावे जिससे अपनी योग्यताके अनुसार विद्वानभी कार्यकरसके साधारण भी अतः भाषामें रीति लिखी गई हैं यद्यपि बहुतसी पद्धतियें छपी हैं तथापि उनमें हमारे देशके अनुसारिणी रीति के न होने से उनका साधारण ब्राह्मण नहा लेते थे और जहां कहीं पूछते थे, तो यही कि हमारे देश की रीतीवाली कोई पद्धति छपजाव तो अच्छा है कि जैसे तैसे करके पुस्तक छपवादें तो अच्छा होगा जिससे लेने वालों का मूल्य थोड़ा लगे और उपकार बहुत हो विशेषता इस पुस्तक में यह है कि शास्त्रीय पद्धति विधान को नहीं छोड़ा गया बल्कि उनको सुगम रीती से लिखागया है शेष रहा ग्रह पूजन उसको साधारण लिखा गया है क्युंकि १ पूजन पर श्रद्धा लोगों की नहीं रही दूसरा जो करते हैं वो भी संक्षेपको पसद करते हैं इसलिये ग्रह पूजन साधारण लिखा गया है साधारण ब्राह्मण देवताओं से प्रार्थना है कि विद्वान् तो अपनी बुद्धि से काम करा देंगे परंतु आप लोगों के वास्ते ही भाषा रीति लिखी गई है आप सावधानी से यजमानों के गृहमें संस्कार करावें ताकि यजमान का कल्याण हो और आपका यशहो यदि आप लोगोनें प्रेम दिखाया तो ऐसे स्वदेशानुसारि सर्वकर्म कांड की पद्धति प्रकाशित करांऊगा सब से विशेष सूचना यह है कि इसपुस्तक में वैदिक मत्रों पर स्वरांक नहीं लगाए गये और अनुस्वार के वर्गाक्षर पर होने से वर्गात वर्ण नहीं किया गया क्युंकि साधारण पुरुषों को भ्रम हो जावा इस लिये मैं विद्वज्जनों से क्षमा मांगी हूं कि इसत्रुटिपर दृष्टि न देवे हुए इस पुस्तक को सादर लेकर मेरे प्रयत्न का सफल करेंगे और साथ हो यह प्रार्थना करता हूं कि जो भी इस पुस्तक में अशुद्धि रहगई हावो उनको सुधार कर मुझे सूचित करेंगे जिससे दूसरे संस्करण में उनका संशोधन किया जायेगा और उनका नाम धन्यवाद सहित प्रकाशित किया जावेगा अपनी तर्फसे तो शुद्धिपत्र भी लिख दिया है फिर भी कहीं यंत्र, वा, लेख की अशुद्धि रह गई होतो क्षमा करना अलमनल्प लेखेन धीमत्सु

आपका शुभचिंतक लेखक

पं० दयालु चंद्रशर्मा काठपाल ज्योतिषी
मुकाम सैंपा, जिला मुजफर गढ़ पंजाब

# अथ विवाह पद्धति सामग्री

गुड़, आटा, चावल, केसर मुचा, सत रंग इंबीर, कुँगु चिमकणा, सावारंग पीठा, नीला रंग पीठा, रंग पीला वा हलदी, पीठी, सिंदूर, गोरी सरसों, चंदन चिटे दा चूरा, धूपज्वाला, मौली, सुपारियां २५, ५ लाचियांनिक्यां, पंजीरला, नरेल, फुल, घृत कपाह, तेल मिठा वा घृत दीपक वास्ते, मांह, दधि, पाखी, छिकड़े, दी काठी, पत्र अंब, पत्र बट, पत्र पिप्पल, पत्र आंवला, पत्र तुलसी, शमीपत्र जंदी, कुशा, दूब, जौं, तिल, ३ कलश २ वड़े १ छोटा, पूर्णपात्र ६वा ४ वा २ वा १, वस्त्र पूर्णपात्रां दे, मलमल १२ हाथ, २छाणे द्रिपाई पीली १, अम सताना, गोहा, २ चौकियां, चौकी ग्रहां वास्ते, सूहा, काने वा डांगां ८, रेत नदी दी, दीपक, राम कटोरियां १०, शमी काष्ट, चंद काष्ट, चजली कागज वा रूसणी ही, सुवा, फुलियां, चावलें वान्यां, शंख, सीहणी दा धागा, चावल पूर्ण पात्रा वास्ते, मेवा, खड, टके मेल ५पै गुथली, सुवर्ण शलाका १। मा०, कटोरे कुटदे ५ वा ४ वा २, हल, पंजाली, जार, तोशा ४ सेर, पूजा और नांदी मुख वास्ते, गंगा जल, तीन्यादा गोहा, (माचिस),

## वस्तु चुंग वास्ते

गुड, आटा, चावल, फुल, हलदी दा गंढा, सुद, मौली, गोरी सरों, पोन्यां, छले लोहे दे ६, दक्षिणा, दाणे पूजदे, स्वकुला नुसार, रतीनु कार,

## कुली अट्टा

थाली पूजा थाली, गोहा, पोन्यां, दीपक ४ मुखा, रखी लुकार. रसा, दक्षिणा ॥ नवग्रही ॥ थाली पूजनकी, फुल, दीपक, धूप, दक्षिणा— ॥.यही नवग्रही नांदीमुख के स्थान में हैं ॥ देवां धामणी की वस्तु अपने २ कुला नुसार जाननी ॥ तेल मंढी ॥ पूजा की थाली लसी १ गुड़ फुल तीन्यां ७, वस्त्र माता दे वरदे समतां वाले भाटेमिट्टी दे कुंभारदे तेल भुंभाला

## जन्दोक वेले तथा मंदिर दे शकुनांदी सामिग्री

लौंग, लाच्यां, सेजदामेवा, १। शीशा, शाखदा, कजल, सुसाग, एलसी, लाख, कनारी, कंघी, गाहणे, सगनांदे, तलवचे, (लूण, तिल) त्रिपट, कपड़े, सगनांदे, वरकन्यादे,




## सामिग्री द्वितीय विवाहदी

कुनाली, छूणी, १०८दियाकचा, १०८वटीं, तेलमिठा, ॥=चैखिल, छुन्नीवि वचहावे,॥= चोवललुहाटेचिचडवाले, खंड, खोर, पहाजदीचांदीदी, झेवर, त्रिमवांश, घागामोलीदा, कही, शृंगारदीपद्धी, उर्गाहणे, बाखियां, कंडण, नथ, अणवट, मुद्री, छल्ले, कनारी, मुसाण, एतली, कंघो, छुरमेदाणी, छुरमचू, शीशा, दखी, मायदी, कज्जल ।

---

## अथ गज दंत ( चूडा ) संकल्पः

ओमद्येत्यादि० अमुकगोत्रामसुकनाम्नी मिमां कन्या मलंकर्तु कामःकुलाचार रीतिज्ञातिवर्णलाचितानिइमानिगजदंत विनिर्मितवलयानिविश्वकर्मदेवतानि अमुकनाम्न्यै कन्यायै श्री लक्ष्मीनारायण प्रीतयेदातुमहमुत्सृजे

### दक्षिणा

ओमद्यकृतेतद्गजदंत विनिर्मितवलयदान प्रतिष्ठार्थमिदं दक्षिणाद्रव्यं श्रीलक्ष्मीनारायण प्रीतयेअमुकनाम्न्यैकन्यायै दातुमहमुत्सृजे कृतैतत्कर्मणा श्रीलक्ष्मीनारायणयोः प्रीतिरस्तु

वर वधू के वस्त्रों की प्रतिष्ठा कर के उनकोवस्त्र पहिनाकर दोनों के सजे पल्लों में पुष्प अक्षत फल दक्षिणा रख कर प्रतिष्ठा करावे पल्लो पल्ली बांधे देखो पृष्ठ २७ पर संकल्प है।

### चौकियों के नीचे दक्षिणा धारण करे

## अथासन प्रतिष्ठा

ओमद्येत्यादि० अमुकशर्मणो विवाहादो वरवध्वोरा सनप्रतिष्ठा शुभाभवतु ।

## वर उपानत (जोडा) उतारे ॥ मंत्र ॥

ओं अग्नीहवो देवाघृतकुंभ प्रदेशायां चक्रुस्ततोवराहः संवभूवतस्मा द्वराहोगावःसंजानते तत्पशुनामेवैतद्दिशे प्रतिष्ठति तस्माद्वराह्या उपानहा उपमुंचते ।

वर वधू कुलगुरु का स्मरण करके दक्षिण पाद क्रम से चौकी पर बैठे ।

यदि विवाह से पूर्व नांदीमुखश्राद्ध न किया हो तो गणेशपूजन के अनंतर पकान्न दक्षिणा संयुक्त १२ वा ४ भोजन संकल्प करे-

## ब्राह्मण भोजन

३ वा १ ब्राह्मण भोजन वर पिता संकल्प करे

ओमद्येत्यादि० अमुकशर्मणो विवाह कर्मणि विवाहांगत्वेनकर्तव्यनांदीमुखाभ्युदयिकश्राद्धे अमुकगोत्राणां मातृपितामही प्रपितामहीनाम मुकदेवीनां अमुकगोत्राणां पितृपितामह प्रपितामहानाममुकशर्मणां अमुकगोत्राणां सपत्नीक मातामह प्रमातामह वृद्धप्रमातामहानाम मुकशर्मणां आभ्युदयिकश्राद्ध संबंधिनो विश्वेदेवा एतत्पकान्नंसदक्षिणंवोनमः

## पुनः ९ वा ३ ब्राह्मण भोजन संकल्प करे

ओमद्येत्यादि० अमुकशर्मणो विवाह कर्मणि विवाहांगत्वेनकर्तव्यनांदीमुखाभ्युदयिकश्राद्धे मातृपितामही प्रपितामहीनाम मुकदेवीनां तथा च पितृपितामह प्रपितामहानां अमुकशर्मणां तथाच सपत्नीक मातामह प्रमातामह वृद्धप्रमातामहानाम मुकशर्मणां प्रीत्यर्थ मिदंपकान्नं सदक्षिणं यथा संभवं वः स्वधा-इति—

---

श्री गणेशायनमः

# अथ विवाह पद्धतिः

घृत वा तिल तैल से रचा दीपक जगावे पुष्पाक्षत दक्षिणा पत्रोंमें रखें स्वकुलगुरु का ध्यान करें ॥ पढ़ें ॥

ओं चिन्तासन्तानहंतारो यत्पादांबुजरेणवः॥ स्वीयानांतान्निजाचार्यान् प्रणमामि मुहुर्मुहुः॥१॥ यदनुग्रहतोजन्तुः सर्वदुःखातिगोभवेत् ॥ तमहं-सर्वदावन्दे श्रीमद्वल्लभनन्दनम् ॥२॥ यदुक्तंतात-चरणैः श्रीकृष्णःशरणंमम ॥ तत एवास्तिमच्चित्त-मैहिकेपारलौकिके॥३॥ ममचित्तस्यविश्वासः श्री-गोपीजनवल्लभे ॥ यदातदाकृतार्थोहंशोचनीयोन-कर्हिचित् ॥ ४ ॥ श्रीलाल जी कोजगज्जीवोभक्ति-मार्गप्रदर्शकः॥जीवोद्धारायलोकेऽस्मिन्नाविरासी-त्स्वयंहरिः ॥५॥ श्री लालकृपाल जगतविषे भृत की सदा सहाय कष्ट पडे सावधान जो सुमरे तत क्षण आय॥६॥ देश विदेश जल थल विषे जो नर हितचित्त ध्याय॥ मथुरा पति गुसाईं श्री लाल जी मन वांच्छित फल पाय ॥७॥ सेवकतारे सिंधु में लीने राख जहाज ॥ दूलह श्री गोपीनाथ जी

करो अचित के काज ॥ केवल अपने दास की तऊँ महाराज को लाज ॥८॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः॥ येषामिंदी वरश्यामो हृदयस्थो जनार्दनः ॥९॥ मंगलं भगवान् विष्णुर्मंगलं गरुड-ध्वजः॥ मंगलं पुंडरीकाक्षो मंगलाय तनोहरिः॥१०॥

ब्राह्मणों का पूजन करके प्रार्थना करे

ओं ब्राह्मणाः संतु मेशस्ताः पापात्पांतुसमा-हिताः॥ देवानांचैवदातारस्त्रातारः सर्वदेहिनाम् ॥ १ ॥ जपयज्ञैस्तथाहोमैर्दानैश्च विविधैः पुनः ॥ तुष्टास्तृप्तिं प्रयच्छंति पितरस्त्रिदिवेश्वराः ॥ २ ॥ येषांदेहेस्थितादेवाः पावयंतिजगत्त्रयम् ॥ तेमां रक्षंतु सततं विवाहेऽस्मिन् व्यवस्थिताः ॥ ३ ॥ समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूम्र-केतवः ॥ अपार संसार समुद्र सेतवः पुनंतु मां ब्राह्मण पादपांसवः ॥४॥ आपद् घनध्वांत सहस्र-भानवः समीहितार्थार्पण कामधेनवः ॥ समस्त-तीर्थाम्बु पवित्रमूर्तयोरक्षंतु मां ब्राह्मणपादपांसवः ॥ ५ ॥ विप्रौघदर्शनात्क्षिप्रंक्षीयं तेपापराशयः॥ वंद-नान्मंगलावाप्तिरर्चनादच्युतंपदम् ॥६॥ आधि-व्याधिहरन्नृणां मृत्युदारिद्र्यनाशनम् ॥ श्रीपुष्टि-कीर्तिदंवंदे विप्र श्री पादपंकजम् ॥७॥

BHARAT LIBRARY S N.........

अथ संपूजिता ब्राह्मणाः

गौरसर्षपं सर्वतो विकीर्य अक्षतानादाय स्वस्ति वाचनं मधुर स्वरेण कुर्युः ॥

## अथ स्वस्ति वाचनम्

वर और कन्या का पिता वर पिता और ब्राह्मण अक्षत (चावल) हाथ में लें ब्राह्मण स्वस्ति वाचन करें

हरिः ओं स्वस्ति नइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥१॥ ओं पयः पृथिव्यां पयऽओषधीषुपयो दिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीः प्रदिशः सन्तुमह्यम् ॥२॥ ओं विष्णोर राटमसि विष्णोः श्नप्त्रेस्थो विष्णोःस्यूरसि विष्णोर्ध्रुवोसि वैष्णवमासिविष्णवेत्वा ॥३॥ ओं अग्निर्देवता वातोदेवता सूर्योदेवता चन्द्रमादेवता वसवोदेवता रुद्रादेवताऽऽदित्यादेवता मरुतोदेवता विश्वेदेवादेवता बृहस्पतिर्देवतेन्द्रोदेवता वरुणोदेवता ॥४॥ ओं द्यौः शान्ति रन्तरिक्ष ँ शान्तिः पृथिवी शान्तिरापः शान्ति रोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व ँ शान्तिः शान्ति रेवशान्तिः सामाशान्ति रेधिसुशान्तिर्भवतु ॥५॥ ओं विश्वा-

निदेव सवितर्दुरितानि परासुव यद्भद्रंतन्न- आसुव॥ ६ ॥ इमारुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहेमतीः यथा शमसद्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥७॥ एतन्ते देव सवितुर्यज्ञंप्राहुर्बृहस्पतये ब्रह्मणे ॥ तेनयज्ञमवतेन यज्ञपतिंतेनमामव ॥८॥ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ँ समिमं- दधातु विश्वेदेवास इह मादयंतामों प्रतिष्ठ एपवैप्रतिष्ठानामयज्ञो यत्रैतेनयज्ञेन यजन्तेसर्वमेव प्रतिष्ठितंभवति ॥९॥

## कन्या पिता सङ्कल्पङ्कुर्यात्

कन्या का पिता गन्धाक्षत पुष्प जल लेकर प्रतिज्ञा सङ्कल्प करे।

ओं तत्सदुब्रह्मणोन्हिद्वितीयपरार्द्धे श्री श्वेत- वाराहकल्पे जम्बुद्वीपे भारतखण्डे आर्य्यावर्तै- कदेशान्तरगत कुमारिका नाम क्षेत्रे कलियुगे कलियुग प्रथमचरणे*ऽमुकसंवत्सरे, ऽमुकमासे, ऽमुकपक्षे, ऽमुकतिथौ, ऽमुकवासरे, यथायोग करण मुहूर्ते प्रवर्तमानेऽद्यतनदिने श्रुतिस्मृति- पुराणोक्तफलं प्राप्त्यै धर्मार्थ काममोक्ष वर्गचतुष्ट-

* सर्वत्र अमुक के स्थान पर वर्तमान संवत मास आदि का नाम लेना।

यसिध्यर्थं यथाचित्तहर्ष कन्यादान सांगता सिध्यर्थेंच यथासंभवं श्रीगणेशादि पूजनं अमुक शर्माहं करिष्ये ॥

## अथ वर कर्तृकः प्रतिज्ञा सं०

यदि वर स्वयं पूजन करना हो तो संकल्प करे

ओं मद्येत्यादिऽमुकसम्वत्सरे ऽमुक पक्षे ऽमुक-तिथौ ऽमुकवासरे ऽमुकगोत्रस्या ऽमुकशर्मणो मम विवाह कालीनलग्नतो निष्टस्थानस्थित सूर्य्यादि ग्रह दोषजन्य जनितजनिष्यमाणात्मक दोषत्रय-निरास पूर्वक स्वकीय सुख सन्तान धनधान्या-द्यभिवृद्धि हेतवे श्रीगणेशादीनां यथा संभव पूजन ममुकगोत्रो ऽमुकशर्माहं करिष्ये॥

## वर पितृकर्तृक प्रतिज्ञा सं०

यदि वर के पिताने पूजन करना हो तो पिता संकल्प करे यदि वर का पिता न हो तो ज्येष्ट भ्राता चाचा आदि अपना सम्बन्धी पूजन करे

ओं अद्येत्यादि० अमुक शर्मणोमत् पुत्रस्य विवाह विधौनिखिलविघ्न दोषानिरासपूर्वक सुख सन्तान धनधान्याद्यभिवृद्धि हेतुक श्रीगणेशादि पूजनममुकगोत्रो ऽमुकप्रवरो ऽमुकशर्माहं करिष्ये

# अथ श्रीगणपति पूजनम्

पूजक चावल हाथ में लेकर श्रीगणेश का ध्यान करे।

विनायकं महत्पुण्यं सर्वदेव नमस्कृतम्॥
अविघ्नं सर्वकार्येषु विनायकमाह्वयाम्यहम्॥ १॥
अथातःसंप्रवक्ष्यामि गणेशयागमुत्तमम्॥ आदौ-
गणपतिःपूज्यः सर्वकामफलप्रदः॥२॥ येन पूजित
मात्रेण सर्वविघ्नः प्रणश्यति॥ एक दंतोत्कटोदेवो
गजवक्त्रस्त्रि लोचनः॥३॥ नागयज्ञोपवीत स्तुतस्मै
गणपतयेनमः॥ प्रणम्याशिरसा देवंगौरीपुत्रं विना-
यकम्॥४॥ भक्त्याच संस्तुवेन्नित्यमात्म कामा-
र्थसिद्धये॥ ओं गणानांत्वा गणपतिꣳहवामहे।
प्रियाणांत्वा प्रियपतिꣳ हवामहे। निधीनांत्वा
निधिपति ꣳहवामहे वसोमम। आहमजानिगर्भ-
धमा त्वमजासिगर्भधम्॥ ५॥ ओं नमो गणेभ्यो
गणपतिभ्यश्चवो नमो नमो व्रातेभ्यो व्रातपतिभ्य
श्चवो नमो नमो गृत्सेभ्यो गृत्सपति भ्यश्चवो नमो
नमो विरूपेभ्यो विश्वरूपेभ्यश्चवो नमः॥ ६॥
गणेश्वरं विघ्न विनाशनं च लम्बोदरं मोदकवल्लभंच
॥ सुरासुरैर्वंदितपूजितं च गणेश्वरं शरणमहं प्रप-
द्ये॥ ७॥ ओं सुमुखश्चैकदंतश्च कपिलो गज-
कर्णकः॥लम्बोदरश्च विकटो विघ्ननाशो विनायकः

॥८॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः॥
द्वादशैतानिनामानि यः पठेच्छृणुयादपि ।। ९ ॥
विद्यारंभे विवाहेच प्रवेशेनिर्गमेतथा॥ संग्रामे संक-
टेचैव विघ्नस्तस्यनजायते ॥ १० ॥ श्रीमन्महा-
गणाधिपतयेनमः भगवन् गणाधिपते इहागच्छ
इहातिष्ठ यावत पूजां करोमि तावत् सन्निहि-
तोभव पाद्यं अर्घ्यं आचमनीयं स्नानं समर्पयामि
पुनराचनीयं समर्पयामि वस्त्रं (मांगलिकसूत्रं)सम-
र्पयामि गंध मालेपयामि । पुष्पाणि समर्पयामि ।
अक्षतान् समर्पयामि । धूप माघ्रापयामि । दीपं
दर्शयामि । नैवेद्यं निवेदयामि । पुनराचमनीयं.
समर्पयामि । मुखशुध्यर्थं पूगीफलं एलापत्रं सम-
र्पयामि । पूजासाफल्यार्थें दक्षिणाद्रव्यं समर्पयामि।
नमस्कारं करोमि प्रार्थयामि ॥ *

ओं वक्रतुण्ड महाकाय कोटिसूर्य समप्रभ।
अविघ्नं कुरुमेदेव सर्वकार्येषु सर्वदा ॥ १ ॥ देहिमे

---

* सर्वत्र षोडशोपचार पूजाक्रमः १ पाद्य २ अर्घ ३ आचमन ४ स्नान ५ पुनराचमनीय ६ वस्त्र ७ गन्ध ८ पुष्प ९ अक्षत १० धूप ११ दीप १२ नैवेद्य १३ पुनराचमनीय १४ पूगीफल १५ दक्षिणा १६ नमस्कार इस तरह सर्व ग्रहो में १६ उपचार पूजन जानना और अन्त में नमस्कार करना जल्दी करना होतो पाद्यं अर्घ आचमनीय स्नानं पुनराच० वस्त्रं गंधं अक्षतान् पुष्पं धूपं दीपं नैवेद्यं पूगीफलं दक्षिणां समर्पयामि नमस्कारं करोमि

ऋद्धिसौभाग्यं देहिमे धनसंपदाम्। इच्छासिद्धिं कुरुमेदेव दयादीनं गणेश्वर ॥ २ ॥ भगवन् गणपते अनयायथा संभवया पूजया पूजितस्त्वं ममोपरिकृपांकुरुरक्षां कुरुतेनमः इतिगणपतिपूजनम॥

यदि नांदी मुखीयात्र संकल्प करना होतो करे—

## अथग्रहाणा मावाहनम्

कन्या का पिता और वर पक्षीय पूजन करने वाला वाम हाथ पर चावल लेकर अपने आगे चौकोण में वा ग्रह मण्डल में एक एक चावल प्रति श्लोकरखे ग्रहों का आवाहन करें।

विनायकं महत्पुण्यं सर्वदेवनमस्कृतम्। अविघ्नं सर्वकार्येषु विनायक माह्वयाम्यहम्॥ १ ॥ आवाहयेद्वतं नागंफणिशत समन्वितम्॥ आगच्छोरगराजत्वंक्षेत्रे स्मिन्सन्निधोभव ॥ २ ॥ आवाहयाम्यहंदेवी मांतृंश्च लोकमातृकाः॥ गौर्यादिकाः पोडशकाः कुलदेवी समन्विताः ॥ ३ ॥ दिवाकरं सहस्राक्षं ब्रह्माद्यैरमरैःस्तुतम् ॥ लोकनाथं जगच्चक्षुः सूर्यमावाहयाम्यहंम्॥ ४॥ हिमरश्मिन्निशानाथं तारापत्य मृतोद्भवम्॥ ओपधीनांच राजानंसोममावाह० ॥५॥ धरणीगर्भसंभूतं विद्युत्तेजः समप्रभम्॥ कुमारं शक्तिहस्तंच भौम मावा० ॥ ६ ॥ बुधं बुद्धि प्रदातारं सोमवं-

शविवर्धनम् ॥ यजमान हितार्थाय बुध मावा०
॥७॥ वृद्धिश्रेष्ठांगिरःपुत्रंदेवानांच पुरोहितम् ॥
शक्रस्यमन्त्रिणन्नित्यं गुरुमावा० ॥८॥ प्रविष्ठं
जठरेशम्भोर्निष्क्रान्तं पुनरक्षतम् ॥ पुरोहितंच
दैत्यानांशुक्रमावा० ॥ १० ॥ प्रदीप्तवन्हिवर्णाभं
भिन्नाञ्जनसमप्रभम् ॥ छायामार्तंडसम्भूतं शनि
मावा० ॥११॥ चक्रेणछिन्नमूर्धानं विष्णुनाभिनि
रीक्षितम् ॥ सैंहिकेयं महाकायं राहुमावा०॥१२॥
ब्रह्मणःकुलसंभूतं दृष्टलोकभयावहम् ॥ शिखिनं
तुमहात्मानं- केतुमावा० ॥१३॥ ब्रह्माणंशिरसा
नित्यमष्टनेत्रं चतुर्मुखम् ॥ गायत्री सहितंदेवं ब्रह्म
आवा० ॥१४॥ केशवं पुंडरीकाक्षं माधवं मधुसूद-
नम् ॥ रुक्मिणी सहितं देवं विष्णुमावा० ॥१५॥
शिवंशङ्करमीशानं द्वादशार्धार्धलोचनम् ॥ उमया
सहितं देवं शम्भुमावा० ॥१६॥ रत्नसागरसम्भू-
तांशरीरे विष्णुनाश्रिताम् ॥ यजमान हितार्थाय
लक्ष्मीमावा० ॥१७॥ सर्वसौख्यप्रदां नित्यं वीणा
पुस्तकधारिणीम् ॥ मातरंसर्वलोकानां वाणी
मावा० ॥१८॥ हिमपर्वत सम्भूतांशरीरे शम्भु
नाश्रिताम ॥ यजमान हितार्थाय उमा मावा०॥
१९॥ ऐरावतसमारूढं वज्रहस्तंमहाबलम् ॥ प्रा-

ऋद्धिसौभाग्यं देहिमे धनसंपदाम् । इच्छासिद्धि कुरुमेदेव दयादीनं गणेश्वर ॥ २ ॥ भगवन् गण-पते अनयायथा संभवया पूजया पूजितस्त्वं ममो-परिकृपांकुरुरक्षां कुरुतेनमः इतिगणपतिपूजनम॥

यदि नांदी मुखीयाम संकल्प करना होतो करे—

## अथग्रहाणामावाहनम्

कन्या का पिता और वर पक्षीय पूजन करने वाला वाम हाथ पर चावल लेकर अपने आगे चौकोण में वा ग्रह मण्डल में एक एक चावल प्रति श्लोकरखे ग्रहों का आवाहन करें।

विनायकं महत्पुण्यं सर्वदेवनमस्कृतम् । अविघ्नं सर्वकार्येषु विनायक माह्वयाम्यहम् ॥ १ ॥ आवा-हयेद्दुतं नागंफणिशत समन्वितम् ॥ आगच्छो रगराजत्वंक्षेत्रे स्मिन्सन्निधोभव ॥ २ ॥ आवाह-याम्यहंदेवी मातृंश्च लोकमातृकाः ॥ गौर्यादिकाः षोडशकाः कुलदेवी समन्विताः ॥ ३ ॥ दिवाकरं सहस्राक्षं ब्रह्माद्यैरमरैःस्तुतम् ॥ लोकनाथं जगच्च-क्षुः सूर्यमावाहयाम्यहम् ॥ ४॥ हिमरश्मिन्निशा-नाथं तारापत्य मृतोद्भवम् ॥ ओषधीनांच राजा नंसोममावाह० ॥५॥ धरणीगर्भसंभूतं विद्युत्तेजः समप्रभम् ॥ कुमारं शक्तिहस्तंच भौम मावा० ॥ ६ ॥ बुधं बुद्धि प्रदातारं सोमवं-

शविवर्धनम् ॥ यजमान हितार्थाय बुध मावा० ॥७॥ बुद्धिश्रेष्ठांगिरःपुत्रंदेवानांच पुरोहितम् ॥ शक्रस्यमन्त्रिणन्नित्यं गुरुमावा० ॥८॥ प्रविष्टं जठरेशम्भोर्निष्क्रान्तं पुनरक्षतम् ॥ पुरोहितंच दैत्यानांशुक्रमावा० ॥ १० ॥ प्रदीप्तवन्हिवर्णाभं भिन्नाञ्जनसमप्रभम् ॥ छायामार्तंडसम्भूतं शनि मावा० ॥११॥ चक्रेणछिन्नमूर्धानं विष्णुनाभिनिरीक्षितम् ॥ सैंहिकेयं महाकायं राहुमावा० ॥१२॥ ब्रह्मणःकुलसंभूतं दृष्टंलोकभयावहम् ॥ शिखिनं तुमहात्मानं केतुमावा० ॥१३॥ ब्रह्माणंशिरसा नित्यमष्टनेत्रं चतुर्मुखम् ॥ गायत्री सहितंदेवं ब्रह्म आवा० ॥१४॥ केशवं पुंडरीकाक्षं माधवं मधुसूदनम् ॥ रुक्मिणी सहितं देवं विष्णुमावा० ॥१५॥ शिवंशङ्करमीशानं द्वादशार्धार्धलोचनम् ॥ उमया सहितं देवं शम्भुमावा० ॥१६॥ रत्नसागरसम्भूतांशरीरे विष्णुनाश्रिताम् ॥ यजमान हितार्थाय लक्ष्मीमावा० ॥१७॥ सर्वसौख्यप्रदां नित्यं वीणा पुस्तकधारिणीम् ॥ मातरंसर्वलोकानां वाणी मावा० ॥१८॥ हिमपर्वत सम्भूतांशरीरे शम्भुनाश्रिताम ॥ यजमान हितार्थाय उमा मावा० ॥१९॥ ऐरावतसमारूढं वज्रहस्तंमहाबलम् ॥ प्रा-

च्यांदिशिसमाश्रित्य इंद्रमावा० ॥२०॥ छागपृष्ठ समारूढं शक्तिहस्तंमहावलम् ॥ आग्नेय्यांदिशि ह्याश्रित्य अग्निमावा० ॥ २१ ॥ महिपेसुसमारूढं दंडहस्तंमहावलम् ॥ याम्यांदिशिसमाश्रित्ययम मावाहयाम्यहम् ॥ २२ ॥ महाप्रेत समारूढं खड्गहस्तंमहावलम् ॥ नैर्ऋत्यांदिशिह्याश्रित्य निर्ऋति माह्वयाम्यहम् ॥२३॥ प्रेतपृष्ठसमारूढं पाशहस्तं महावलम् ॥ वारुण्यांदिशि ह्याश्रित्य वरुणमाह्व० ॥२४॥ मृग पृष्ठ समारूढंध्वजा हस्तंमहावलम् ॥ वायव्यां दिशिह्याश्रित्य वायुमावा० ॥२५॥ महायक्षसमारूढं गदाहस्तंमहावलम् ॥ उदीच्यां दिशिह्याश्रित्य कुबेरमाह्व०॥२६॥ वृषपृष्ठसमारूढं शूलहस्तंमहावलम् ॥ ऐशान्यां दिशिह्याश्रित्य शिवमावा० ॥२७॥ आवाहयाम्यहं देवींदिव्याभरणभूपिताम् ॥ स्त्रीरूपा पृथिवींशान्तांब्रह्मस्थाने सुपूजिताम् ॥२८॥ आवाहयेतमाकाशं विष्णोःपदमनन्तकम् ॥ यत्रदेवास्तथायक्षाग्रहाः सर्वेप्रतिष्ठिताः ॥२९॥ अत्र्यादीन्मुनिश्रेष्ठान्नरुंधती युतांस्तथा ॥ विवाहयज्ञशान्त्यर्थं सप्तर्षीनाह्व० ॥३०॥ ब्रह्मज्ञमृपिराजं च परात्मानं परंपदम् ॥ आदित्यादि

ग्रहाधीशंध्रुवमावा० ॥३१॥ ब्रह्मांडे ऋाष्टिराजंहि-
दक्षिणस्यां दिशिस्थितम् ॥ महोदरं महावाहुमग-
स्तिमाह्व०॥३२॥धर्माधर्मं विचाराययाम्यांदिशि
समाश्रितम् ॥ धर्मसिंहासनासीनं धर्ममावा० ॥
३३॥ धर्मराज हितंभृत्यं धर्माधर्मं विचारकम् ॥
चित्रगुप्तंमहाबुद्धिं चित्रमावा० ॥३४॥ पक्षाः
संवत्सरामासाऋतवश्चायनानिच ॥ कलाःकाष्ठा-
मुहूर्तांश्च सर्वानावा० ॥३५॥ लोकपालाः खगा
नागा योगिन्योयक्षमातरः ॥ यजमानस्यपुष्ट्यर्थं
सर्वानावा० ॥ ३६ ॥ सिद्धाश्चकिन्नराश्चैव गंधर्वा
प्सरसांगणाः ॥ विद्याधराश्चपुष्ट्यर्थं सर्वानावा०
॥ ३७॥ दिविभूम्यन्तरिक्षेच येचपातालवासिनः।
तेसर्वेत्रसमायान्तु स्वस्ति कुर्वन्तुमेगृहे ॥ ३८ ॥
मरुद्भूतास्तथारुद्रा आदित्याद्वादशैवतु ॥ अनो-
दिताहिये केचित्सर्वानावा० ॥३९॥ आगच्छन्तु
सुराःसर्वेयेचान्येष्यंशभागिनः ॥ सर्वेस्वपूजांगृ-
ह्णन्तुदत्वा शान्तिमहीतले * ॥ ४० ॥ इति सर्व-
ग्रहाणामावाहनम् ॥

अथ ऋत्विजांवरणम् । आचार्य वरणसंभृ-
तिमादाय संकल्पयेत् ।ओ मद्येत्यादि०अमुकस्य

*ऐसे सब को अवाहन कर के सामान्य तथा पूजन करा देना।

विवाहकर्मणिएभिः पुष्पाक्षतादिभि रर्चायित्वे नामुकगोत्रममुकशर्माणंब्राह्मणंत्वा महंवृणो वरण सामिग्रीं विप्रायदद्यात *

कंकण बांध कर अंगूठा ब्राह्मण का पकड़ कर प्रार्थना करे।

आचार्यस्तु यथास्वर्गे शक्रादीनां बृहस्पतिः ॥
तथाहि ममयज्ञेस्मिन् आचार्यस्त्वंमे भवप्रभो ।१।
अहं भवामि । इति विप्रोवदेत् । वृतोस्मीतिच उक्त्वा मन्त्रं पठेत् ॥

मैं आचार्य हूं ऐसे कह कर वृतोस्मि कह कर ब्राह्मण मन्त्र पढ़े।

घृतेन दीक्षामाप्नोतिदीक्षयाप्नोति दक्षिणाम् ॥
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥१॥

ऐसे ब्राह्मण वरण करे क्रमएक हैं इस लिये मन्त्र लिखे जाते हैं शेष सर्वकृत्य पहले की तरह करना।

यथा चतुर्मुखोब्रह्मा गायत्री सहितःप्रभुः। तथा त्वं ममयज्ञेस्मिन् एवंऋत्विक्भवप्रभो ॥ २ ॥
ओं कातराक्षो यजुर्वेदश्रेष्ठु भो ब्रह्मदैवतः॥ भारद्वाज स्तुविप्रेन्द्र ऋत्विक्त्वं मेमखेभव ॥ ३ ॥
सामवेदस्तु पिंगाक्षश्रेष्ठु भो विष्णुदैवतः ॥ काश्यपेयस्तु विप्रेन्द्र ऋत्विक्त्वंमेमखेभव ॥ ४ ॥

* वर पक्षीय वरणसामिग्री. संकल्प करके ब्राह्मण को दे।

ग्रहाधीशंध्रुवमावा० ॥३१॥ ब्रह्मांडे ऋष्टिराजंहि-दक्षिणस्यां दिशिस्थितम् ॥ महोदरं महाबाहुमग-स्तिमाह्व०॥३२॥धर्माधर्म विचाराययाम्यांदिशि समाश्रितम् ॥ धर्मसिंहासनासीनं धर्ममावा० ॥ ३३॥ धर्मराज हितंभृत्यं धर्माधर्म विचारकम् ॥ चित्रगुप्तंमहाबुद्धिं चित्रमावा० ॥३४॥ पक्षाः संवत्सरामासाऋतवश्चायनानिच ॥ कलाःकाष्ठा-मुहूर्तांश्च सर्वानावा० ॥३५॥ लोकपालाः खगा नागा योगिन्योयक्षमातरः ॥ यजमानस्यपुष्ट्यर्थं सर्वानावा० ॥ ३६ ॥ सिद्धाश्चकिन्नराश्चैव गंधर्वा प्सरसांगणाः ॥ विद्याधराश्चपुष्ट्यर्थं सर्वानावा० ॥ ३७॥ दिविभूम्यन्तरिक्षेच येचपातालवासिनः। तेसर्वेत्रसमायान्तु स्वस्ति कुर्वन्तुमेगृहे ॥ ३८ ॥ मरुद्भूतास्तथारुद्रा आदित्याद्वादशैवतु ॥ अनो-दिताहिये केचित्सर्वानावा० ॥३९॥ आगच्छन्तु सुराःसर्वेयेचान्येप्यंशभागिनः ॥ सर्वेस्वपूजांगृ-ह्णन्तुदत्वा शान्तिमहीतले * ॥ ४० ॥ इति सर्व-ग्रहाणामावाहनम् ॥

अथ ऋत्विजांवरणम् । आचार्य वरणसंभृ-तिमादाय संकल्पयेत् ।ओं मद्येत्यादि०अमुकस्य

*ऐसे सब को अवाहन कर के सामान्य तया पूजन करा देना ।

विवाहकर्मणिएभिः पुष्पाक्षतादिभि रांचार्यत्वे नामुकगोत्रममुकशर्माणंब्राह्मणंत्वा महंवृणो वरण सामिग्रीं विप्रायदद्यात *

कंकण बांध कर अंगूठा ब्राह्मण का पकड़ कर प्रार्थना करे।

आचार्यस्तु यथास्वर्गे शक्रादीनां बृहस्पतिः॥ तथाहि ममयज्ञेस्मिन् आचार्यस्त्वंमे भवप्रभो।१।

अहं भवामि। इति विप्रोवदेत्। वृतोस्मीतिच उक्त्वा मन्त्रं पठेत्॥

मैं आचार्य हूं ऐसे कह कर वृतोस्मि कह कर ब्राह्मण मन्त्र पढ़े।

घृतेन दीक्षामाप्नोतिदीक्षयाप्नोति दाक्षिणाम्॥ दाक्षिणा श्रद्धामाप्नोति श्रद्धया सत्य माप्यते॥१॥

ऐसे ब्राह्मण वरण करे क्रमएक हैं इस लिये मन्त्र लिखे जाते हैं शेष सर्वकृत्य पहले की तरह करना।

यथा चर्तुमुखोब्रह्मा गायत्री सहितःप्रभुः। तथा त्वं ममयज्ञेस्मिन् एवंऋत्विक् भवप्रभो॥ २॥

ओं ऋातराक्षो यजुर्वेदश्रेष्ठु भो ब्रह्मदैवतः॥ भारद्वाज स्तुविप्रेन्द्र ऋत्विक्त्वं मेमखेभव॥३॥

सामवेदस्तु पिंगाक्षश्रेष्ठु भो विष्णुदैवतः॥ काश्यपस्तु विप्रेन्द्र ऋत्विक्त्वंमेमखेभव॥४॥

* इस पर्यन्त वरणसामिग्री संकल्प करके ब्राह्मण को दे।

बृहन्नेत्रोथर्ववेदोऽनुष्टु भोरुद्र दैवतः ॥ वैखान-
सगोत्रविप्रेन्द्र ऋत्विक्त्वंभमखेभव ॥ ४ ॥

॥ इति ऋत्विजां वरणम् ॥

ततो ब्राह्मणाः पुष्पाक्षतानि गृहीत्वा आशीर्वाद
दद्युरथच तद्दत्वा कंकणं बध्नंति—

फिर ब्राह्मण हाथ में पुष्पा चत लेकर आशीर्वाद के मन्त्र पढ कर वह यजमान को दें और कंकण यजमान को बाधें।

ओं ऋग्वेदस्तु यजुर्वेदः सामवेदोह्यथर्वणः ॥
ब्रह्म वाक्यैश्चते नित्यं हन्यंते तवशत्रवः ॥ १ ॥
अपुत्राः पुत्रिणः संतु पुत्रिणः संतु पौत्रिणः ॥
अधनाःसधनाः सन्तु सन्तु सर्वार्थ साधकाः॥२॥
विप्र हस्ताच्च गृह्णीयाद्यज्ञ पुष्पफलाक्षतान् ॥ च-
त्वार स्तव वर्द्धन्तु आयुः कीर्ति यशोबलम् ॥३॥
आयु र्वृद्धिर्यशोवृद्धिः प्रज्ञाच सुखसंपदः ॥ धन
सन्तान वृद्धिश्च सर्वेताः सन्तु वृद्धयः ॥ ४ ॥

अथ पंचोंकारपूजनम्

आवाहयाम्यहंदेवमोंकारं परमेश्वरम् ॥अ-
क्षरंत्रिगुणाकारं सर्वाक्षरमयंशुभम् ॥१॥ त्रिमात्रं-
त्र्यक्षरं दिव्यंत्रिपदंचत्रिदैवतम् ॥ अणवंप्रणवं
हंसंस्रष्टारंपरमेश्वरम्॥२॥ अनादिनिधनंदेवमप्रमे-

यंसनातनम् ॥ परंपरतरं वीजं निर्मलं निष्कलं शुभम् ॥ ३ ॥ ओं आब्रह्मन् ब्राह्मणो ब्रह्मवर्चस्वी-जायता माराष्ट्रेराजन्यः शूरइपव्योऽति व्याधीम हारथो जायतां दोग्ध्रीधेनुर्वोढानढ्वानाशुःसप्तिः पुरंधिर्योपा जिष्णुरथेष्ठाः सभेयोयुवास्य यजमानस्यवीरो जायतां निकामे निकामेनः पर्जन्यो वर्षतुफलवत्योन ओषधयःपच्यंतां योगक्षेमोनः कल्पताम् ॥ इति पंचोङ्कार पूजनम् ॥

## अथा रक्षा विधानम्

पुरोहित वर कन्या के सिर ऊपर हाथ रख खड़े।

ओम् गणाधिपं नमस्कृत्य नमस्कृत्यपितामहम् ॥ विष्णुंरुद्रंश्रियंदेवीं वंदेभक्त्या सरस्वतीम् ॥ १ ॥ स्थानंक्षेत्रं नमस्कृत्य दिननाथं निशाकरम् ॥ धरणी गर्भसम्भूतं शशिपुत्रं वृहस्पतिम् ॥ २ ॥ दैत्याचार्यं नमस्कृत्य सूर्यपुत्रंमहाग्रहम राहुंकेतुं नमस्कृत्य यज्ञारंभेविशेषतः ॥ ३ ॥ शक्राद्यादेवताःसर्वे मुनींश्चकथयाम्यहम् ॥ गर्गमुनिं नमस्कृत्य नारदं ऋषि मुत्तमम ॥ ४ ॥ वासिष्ठं मुनि शार्दूलं विश्वामित्रं महा मुनिम् ॥ व्यासंकविंनमस्कृत्य सर्वशास्त्र विशारदम् ॥ ५ ॥ विद्याधिकान्मुनींश्चैव आ-

चार्यांश्च तपोधनान् ॥ तान्सर्वांश्चप्रणम्यादौ यज्ञारंभं करोम्यहम् ॥६॥ पूर्वे रक्षतु गोविन्द आग्नेय्यांगरुड़ध्वजः ॥ याम्यांरक्षतुवाराहोनारसिंहस्तुनैर्ऋते॥७॥ केशवो वारुण्यां रक्षेद्वायव्यां मधुसूदनः ॥ उत्तरे श्रीधरोरक्षेदीशान्यान्तु गदाधरः ॥ ८ ॥ एवंदशदिशोरक्षेद्वासुदेवोजनार्दनः ॥ ऊर्ध्वं गोवर्धनोरक्षे दधःस्थानेमहीधरः यज्ञाग्रे रक्षतांशङ्खः पृष्ठेपद्मन्तथोत्तमम् ॥९॥ वामपार्श्वेगदारक्षेद्दक्षिणेच सुदर्शनः ॥ उपेन्द्रः पातुब्रह्माणमाचार्यम्पातुवामनः ॥१०॥ अच्युतः पातुऋग्वेदं यजुर्वेदमधोक्षजः ॥ कृष्णो रक्षतुसामानं माधवो थर्ववेदकम् ॥ ११ ॥ उग्रहष्टाश्च विप्रास्ते तेनरुद्रेण रक्षिताः ॥ यजमानःसपत्नीकः पुण्डरीकाक्षरक्षितः ॥ १२ ॥ रक्षा हीनंतुयत्स्थानं तत्सर्वंरक्षतां हरिः ॥ वेदमंत्रैस्तुकर्तव्या रक्षाशुभ्रैस्तुसर्षपैः॥ १३ ॥ ओं मानः शꣳसो रोअररुषोधूर्तिः प्राणाङ्मर्त्यस्य। रक्षाणो ब्रह्मणस्पते॥ ओंयदावध्नन्दाक्षायणा हिरण्यꣳशतानीकायसुमनस्यमानाः। तन्मआवध्नामि शतशारदायआयुष्मान् जरदष्टिर्यथासम् ॥१४॥ रक्ष रक्ष

---

* गोरी सर्षप चौफेर केरे ॥

महादेवनीलग्रीवजटाधर ॥ रक्षंतु देवताः सर्वे ब्रह्मविष्णुमहेश्वराः ॥ ब्रह्माविष्णुश्चरुद्रश्चरक्षां कुर्वन्तुते सदा ॥१५॥ इति रक्षा विधानम् ॥

## अथ षोडश मातृ पूजनम्

उत्तर में षोडश मातृ पूजन करे

गौरी पद्मा शचीमेधा सावित्री विजया जया ॥ देवसेना स्वधा स्वाहा मातरोलोकमातरः ॥ १ ॥ धृतिः पुष्टिस्तथा तुष्टि स्तथात्मकुलदेवताः ॥ भगवतीभ्यः षोडश मातृभ्यो नमः ॥ इति ॥

## अथ वासुकि पूजनम्

सुखपर दक्षिण में वसुकि पूजन

अथातः संप्रवक्ष्यामि यदुक्तं वास्तु पूजनम् ॥ येन पूजा विधानेन कर्म सिद्धिस्तुजायते ॥ १ ॥ अनंतं पुडरी काक्षं फणाशत विभूषितम् ॥ विद्युद्दंधूक सदृशंकूर्मारूढं प्रपूजयेत् ॥ २ ॥ ओंनमोस्तुसर्पेभ्योयेकेच पृथिवीमनु ॥ येंऽतरिक्षेये दिवितेभ्यःसर्पेभ्योनमोनमः ॥ वासुकाद्यष्टकुलनाग देवताभ्योनमः । पाद्यादिभिः समर्चयेत् ॥ इति वासुकि पूजनम् ॥

# अथ योगिनी पूजनम्

पहिले ४ मंत्रों से योगिनी का आवाहन करे

आवाह याम्यहं देवीं योगिनीं परमेश्वरीम् ॥ योगाभ्यासेन संतुष्टां परध्यान समन्विताम् ॥ १ ॥ दिव्यकुंडल संकाशां दिव्य ज्वलित लोचनाम् ॥ मूर्तिमतीममूर्तांचउग्रांचैवोग्ररूपिणीम् । २।अनेक भाव संयुक्तां संसारार्णव तारिणीम् ॥ यज्ञं कुर्वन्तु निर्विघ्नं श्रेयो यच्छन्तु मातरः ॥३॥ ऋग्वेदो थय जुर्वेदो योगो योग युयुत्सवः ॥ योगिनी सामवेदस्तु योजये दप्यथर्वणम्॥४॥ एभिर्योगिनीमावा हयेत्

जयाच विजया चैव जयन्तीचाप राजिता॥नन्दा भद्रा तथा भीमा श्री देवी चार्द्ध विन्दुका ॥ १॥ हुंकारी भास्करीभीमा धूम्राक्षीकलहप्रिया ॥ ज्वालांगी कालिकादेवी तथा चण्डा पुरांतसी ॥ २ ॥ दिव्ययोगी महायोगी सिद्धियोगी जनेश्वरी ॥ शाकिनी काल रात्रिश्च ऊर्द्धकेशीनि शाकरी ॥ ३ ॥ गंभीरीभाषिणीचैव ज्वालांगी-नवपन्नगा ॥ राक्षसी घोररक्ताक्षी विश्वरूपी भयंकरी ॥ ४ ॥ डाकिनी रौद्रवैताली कुब्जाकन्य-कभोजिनी ॥ कोटराक्षी भीमभद्रा वुद्धिवेगी भयं-करी ॥ ५ ॥ विरली हंसिनीयक्षी निर्जरातथ्य-

भापिणी ॥ सर्वसिद्धि प्रदातुष्टामनः सिद्धिप्रदायिनी ॥ ६ ॥ ब्रह्माणी वैष्णवीरौद्री मांतगी नंदकेश्वरी ॥ दुर्जयाविकटाचैव तथाचविषलंघिनी ॥ ७ ॥ भैरवीचक्रिणीचैव दुर्मुखी प्रेतवासिनी ॥ कालोग्रा मोहनीचैव तथाच भुवनेश्वरी ॥ ८ ॥ चतुःषष्ठिः समाख्याता योगिन्योहि वरप्रदाः ॥ त्रैलोक्ये पूजितानित्यं देवमानुपयोगिभिः ॥ ९ ॥ भगवतीभ्यश्चतुः षष्ठियोगिनीभ्योनमः पाद्यादिभिः संपूज्य प्रज्वलित दीपसंयुक्त मिष्टान्नमय वलिंदद्यात ॥

पाद्यादि से पूजन कर के दीपक जागता और मिष्ठान्न दक्षिणा वलि दान करे मन्त्र।

ओं ह्रों ह्रीं महारवीं हुं हुं प्रचण्ड फेत्कार शव्दां भ्रां भ्रां घनघोर नंदिनी हां हां हां हसाति उटटि भीं भीं भीं भयानने हुं हुं हुं डमरुकहस्ते लां लां लल्हतिजिह्वे मां मांसादनिवलिप्रिये एहि एहि योगिनि वालिं गृहाण रक्ष रक्षमाम् ॥

पुनः योगी के वास्ते सीधा संकल्प करे।

ओं मद्येत्यादि० अमुकस्य विवाह निर्विघ्नहेतुकार्थकारितग्रह यज्ञान्तर्गत चतुः षष्ठि योगिनी प्रीत्यार्थकतासंपादक सर्वसुखसौभा-

ग्यादि संप्राप्तिकामना पूरकदास्यमानप्रजापति देवताकमेतत्परिमित गोधूमान्नं घृतगुड सहितं चतुरधिक षष्टिकपर्दिका दक्षिणा संयुक्तमेतदामान्नभोजनं स्वेच्छासंप्राप्ताय विछिन्नकर्णायवाऽविच्छिन्नकर्णाय योगिनेऽहं दास्ये—

## अथ प्रताप तिलकम्

पाठक वा पुरोहित यजमान को तिलक लगावें।

आदित्या वसवोरुद्रा विश्वेदेवामरुद्गणाः॥
तिलकं ते प्रयच्छन्तु सर्व कामार्थ सिद्धये॥१॥

## मंडल मध्ये सूर्य पूजनम्

ओं आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यंश्च ॥ हिरण्य येन सवितारथेना देवो याति भुवनानि पश्यन् १ श्री सूर्यायनमः॥ पाद्यादिभिः संपूज्यनमस्कुर्यात्॥

हाथ जोड़े प्रार्थना करे।

पद्मासनः पद्मकरोद्विबाहुः पद्मद्युतिः पद्म तुरंग वाहः॥ दिवाकरो लोकगुरुः किरीटी मयिप्रसादं विदधातु सूर्यः १

## अग्नि कोणे चन्द्र पूजनम्

ओं इमं देवा असपत्न ७ सुवद्धंमहते क्षत्राय महते जैष्ठ्याय महते जान राज्यायेंद्र-

स्येंद्रियाय इममसुष्य पुत्र मसुष्यै पुत्रमस्यै विशएपवोऽमी राजा सोमोऽस्माकं ब्राह्मणाना७ राजा २ श्री चन्द्रमसेनमः ॥ प्रार्थना—

स्वेताम्बरः श्वेतविभूषणश्च श्वेतद्युतिर्दंड-करोद्विवाहुः ॥ चंद्रोऽमृतात्मा वरदः किरीटी श्रेयांसि मह्यं विदधातु देवः ॥

दक्षिणे मंगल पूजनम्

ओं अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयमपा७ रेता७सि जिन्वाति ॥ श्रीभौमायनमः

रक्तांवरोरक्तवपुः किरीटी चतुर्भुजो मेष-गतो गदाभृत ॥ धरासुतः शक्तिधरश्चशूली सदाममस्या द्वरदः प्रशांतः ॥

ईशान्ये बुध पूजनम्

ओं उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते-स७ सृजेथामयं च अस्मिन् सधस्थे अध्युतर-स्मिन् विश्वे देवा यजमानश्च सीदत श्रीबुधाय-नमः ॥

प्रार्थना

पीताम्बरः पीत वपुः किरीटी चतुर्भुजो दंडधरश्चहारी ॥ चर्मासि धृक्सोमसुतः प्रशांतः सिंहाधिरूढो नरदो बुधश्च ४

उत्तरे बृहस्पति पूजनम्

ओं बृहस्पते अतियदर्य्यो अर्हाद्युमाद्विभाति क्रतुमज्जनेषु ॥ यदीदयच्छवसऋत प्रजात तदस्मासु द्रविणंधेहिचित्रम् । श्रीगुरवेनमः ॥

पीतांवरः पीतवपुः किरिटी चतुर्भुजो देवगुरुः प्रशांतः। विभ्रत्सुदंडंच कमंडलुंच तथाक्षसूत्रं वरदोस्तुमह्यम् ॥ पूर्वे शुक्र पूजनम् ॥

ॐ अन्नात्परि श्रुतोरसं ब्रह्मणा व्यपिवत्क्षत्रंपयः सोमंप्रजापतिः । ऋतेन सत्यमिद्रियं विपान ७ शुक्रमंधस इन्द्रस्योंद्रियमिदं पयोमृतंमधु श्रीशुक्रायनमः ॥६॥ प्रार्थना

श्वेतांवरः स्वेतवपुःकिरीटी चतुर्भुजो दैत्य गुरुः प्रशांतः ॥ तथाक्षसूत्रंच कमंडलुंच दंडंच विभ्रद्वरदो स्तुमह्यम् ॥

पश्चिमेशानि पूजनम्

ॐ शन्नो देवी रभीष्टय आपोभवन्तुपीतये। शंय्यो रभिस्रवन्तुनः ॥ श्री शनैश्चरायनमः ॥

नीलद्युतिः शूलधरः किरीटी गृध्रास्थित स्त्रासकरोधनुष्मान् ॥ चतुर्भुजः सूर्यसुतः प्रशांतः सदास्तु मह्यंसवरप्रदोहि ॥ नैर्ऋत्ये राहु पूजनम्—

ॐ कयानश्चित्र आभुव हुतीसदावृधः

सखा। कयाशचिष्ठयावृता ९ ॥ श्रीराहवे नमः ॥
नीलांवरो नीलवपुःकिरीटी करालवक्रः करवालशूली ॥ चतुर्भुजश्चर्मधरश्चराहुः सिंहासनस्थः सवरप्रदः स्यात॥

वायौ केतु पूजनम्

ॐ केतुं कृण्वन्न केतवेपेशो मर्याअपेशसे। समुषद्भिरजायथा। श्री केतवेनमः ॥ प्रार्थना—
धूम्रोद्विबाहुर्वरदोगदाभृत् गृध्रासनस्थो विकृतासनश्च ॥ किरीटकेयूर विभूषितांवरः सदा स्तुमेकेतुगणः प्रशान्तः ॥

अथकेश ( ब्र० वि० महा० ) पूजनम्

ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ता द्विसीमतः सरुचोवेनआवः। सबुध्न्या उपमा अस्यविष्ठाः सतश्चयोनि मसतश्चव्विवः ॥ श्रीब्रह्मणेनमः ॥१॥

विष्णु पूजनम्

ॐ ष्णिोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोःस्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसिविष्णवेत्वा ॥ विष्णवेनमः ॥ रुद्र पूजनम्—
ॐ नमःशंभवायचमयोभवायच नमः शंकरायच मयस्करायच नमः शिवायच शिवतरायच ॥ श्री शंकरायनमः॥इति त्रिदेव पूजनम् ॥

स्याभ्युदयं कुरु एषदधि माषाक्षतबलिस्तेनमः ३

नैऋत्य कोणमें निऋति पूजाकरे

ॐ असुन्वंतम यजमान मिच्छस्ते नस्येत्याह मन्विहितस्करस्य। अन्यमस्म दिच्छसात इत्था-नमो देवि निर्ऋतेतुभ्यमस्तु ॥ निर्ऋतयेनमः ॥

बलिदानकरे

भो निर्ऋतिदेव बलिंभक्ष दिशंरक्ष मम यज-मानस्याभ्युदयं कुरु एषदधि माषाक्षत बलिस्ते नमः

पश्चिम में वरुण पूजा करे ॥

ॐ वरुणास्योत्तं भनमसि वरुणस्यस्कंभ सर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्यऋ-तसदनमसि वरुणस्य ऋतसदनमासीद ॥ श्री वरुणायनमः भो वरुण देवबलिंभक्ष दिशरक्ष ममयजमानस्या भ्युदयंकुरु। एषदधि माषाक्षत बलिस्तेनमः ॥ ५ ॥

वायु कोण में वायु देव पूजे ॥

ॐ आनोनियुद्भिः शतनीभिरध्वर ७ सह स्रिणीभि रुपयाहियज्ञम् ॥ वायो अस्मिन्सवने मादयस्वगात स्वस्तिभिः सदानः श्रीवायवेनमः। भो वायो बलिभक्ष दिशंरक्ष मम यजमानस्या

भ्युदयंकुरु एषदधि माषाक्षत वलिस्तेनमः ॥

उत्तर में कुबेर पूजन करे ॥

ओं वय ७ सोमव्रते तवमनस्त नूषुविभ्रतः प्रजावंतः सचेमहि ॥ श्री कुवेरायनमः ॥ ७ ॥ भो कुबेर वलिंभक्ष दिशंरक्ष मम यजमानस्या भ्युदयंकुरु एषदधि माषाक्षत वलिस्तेनमः ॥

ईशान में रुद्र पूजा करे ॥

ॐ तमीशानं जगतस्तस्थु षस्पतिंधियं जिन्वमवसेहूमहे वयम् । पूषानोयथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये । श्री रुद्रायनमः । भो ईशान वलिंभक्ष दिशंरक्ष मम यजमानस्या भ्युदयंकुरु एषदधि माषाक्षत वलिस्तेनमः ॥

नैर्ऋत्य पश्चिम के मध्य में आकाश पूजन करे ॥

ॐ यावांकशा मधुमत्याश्विना सूनृतावती तया यज्ञमिमिक्षताम् ॥ श्री अनन्तायनमः ॥९॥ भो अनन्त वलिंभक्ष दिशंरक्ष मम यजमानस्या भ्युदयंकुरु । एषदधि माषाक्षत बालिस्तेनमः ॥

ईशान पूर्व के मध्य में पृथ्वी पूजा ॥

ॐ स्योनापृथिवीनो भवान्टक्षरानिवेशनी यच्छानः शर्मसप्रथाः ॥ श्री पृथिव्यैनमः ॥१०॥ भो पृथिवि वलिंभक्ष दिशंरक्ष मम यजमानस्या

भ्युदयंकुरु एषदधि माषाक्षत बलिस्तेनमः ॥

उत्तर में कुबेर पूजन करे ॥

ओं वय ॐ सोमव्रते तवमनस्तनूषुविभ्रतः प्रजावंतः सचेमहि ॥ श्री कुबेरायनमः ॥ ७ ॥ भो कुबेर बलिंभक्ष दिशंरक्ष मम यजमानस्या भ्युदयंकुरु एषदधि माषाक्षत बलिस्तेनमः ॥

ईशान में रुद्र पूजा करे ॥

ॐ तमीशानं जगतस्तस्थु षस्पतिंधियं जिन्वमवसेहूमहे वयम् । पूषानोयथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये । श्री रुद्रायनमः । भो ईशान बलिंभक्ष दिशंरक्ष मम यजमानस्या भ्युदयंकुरु एषदधि माषाक्षत बलिस्तेनमः ॥

नैर्ऋत्य पश्चिम के मध्य में आकाश पूजन करे ॥

ॐ यावांकशा मधुमत्यश्विना सूनृतावती तया यज्ञमिमिक्षताम् ॥ श्री अनन्तायनमः ॥९॥ भो अनन्त बलिंभक्ष दिशंरक्ष मम यजमानस्या भ्युदयंकुरु । एषदधि माषाक्षत बलिस्तेनमः ॥

ईशान पूर्व के मध्य में पृथ्वी पूजा ॥

ॐ स्योनापृथिवीनो भवान्नृक्षरानिवेशनी यच्छानः शर्मसप्रथाः ॥ श्री पृथिव्यैनमः ॥१०॥ भो पृथिवि बलिंभक्ष दिशंरक्ष मम यजमानस्या

भ्युदयंकुरु। एषदधि मापाक्षत वलिस्तेनमः॥

इति दशदिक्पाल पूजनम्

अथ क्षेत्रपाल वलिः

मांह तेल दक्षिणा वलि तेल में मुख देखे॥

शांत्यर्थं पूजितोयस्तु देवैर्यज्ञक्रियासुच॥
त्र्यंवकः खेचरोनित्यं क्षेत्रपाल माह्वयाम्यहम्॥

ॐ नहिस्पश मविदन्नन्य मस्माद्वैश्वानरा त्पुर एतारमग्नेः एमेनमवृधन्न मृताअमर्त्यं वैश्वानरं क्षेत्रजित्यायदेवाः॥ भो क्षेत्रपाल एषदधि मापाक्षत वलिस्तेनमः॥

अथ सप्तर्षि पूजनम्

ॐ सप्तर्षयः प्रतिहिताः शरीरे सप्तरक्षंति सदमप्रमादं सप्तर्षयः स्वप्तो लोकमीयुस्तत्र जाग्रतो अस्वप्नजौ सत्रसदौचदेवौ॥ ॐ अत्रिर्भृगु र्वसिष्ठश्च पुलस्त्यः पुलहःक्रतुः॥ अंगिरेण समायुक्ताः सप्तर्षयो बुधैःस्मृताः॥ अरुंधती सहित सप्तर्षिभ्योनमः॥ इति सप्तर्षि पूजनम्॥

अथाष्ट चिरंजीवि पूजनम्

ॐ अश्वत्थामा वलिर्व्यासो हनुमांश्च विभीषणः॥ पर्शुरामः कृपाचार्यः सप्तै ते चिरजीविनः॥ मार्कंडेयोष्टमः प्रोक्तः सर्वे कल्पांत

जीविनः॥ ओं अश्वत्थाम्नेनमः १ ओं बलिराजाय-
नमः २ ओं व्यासायनमः ३ ओं हनुमतेनमः ४
ओं विभीषणायनमः ५ ओं पर्शुरामायनमः ६
ओं कृपाचार्यायनमः ७ ओं मार्कंडेयायनमः ॥८॥
इत्यष्ट चिरंजीवि पूजनम्

## उत्तरे ध्रुव पूजनम्

आवाहयाम्यहं देवं ध्रुवेशंदेवमुत्तमं वैष्णवं
विष्णु रूपं च पूर्ण ब्रह्म सनातनम् १ विश्वात्मा
विश्वरूपश्च दयावान् शुभलक्षणः॥ अक्रोधनस्तपः
श्रेष्ठो दृढासनो दृढव्रतः २ ध्रुवक्षितिर्ध्रुवयोनि-
र्ध्रुवोसि ध्रुवंयोनिमासीद साधुयो उर्वस्य केतुं
प्रथमं जुषाणाश्विनाध्वर्यूस्तदयतामिहत्वा ३
इति ध्रुव पूजनम्

## अथ दक्षिणेऽगस्त्य पूजनम्

ॐ अगस्तिकुंभो वनिष्टुर्जोनिता शचीभि-
र्यस्मिन्नग्रे योन्या गर्भो अन्तः प्राशिर्व्यक्तः
शतधार उत्सो दुहेन कुंभी स्वधां पितृभ्यः ॥१॥
ब्रह्माडे ऋषिराजोयमगस्त्यो हि महामुनिः॥
महोदरो महाबाहुर्महाज्ञान पराक्रमः ॥२॥
वातापि भक्षकश्चैव तेजवांश्च महातपः ॥ ईदृशः
शिवरूपोहि विष्णु भक्ति परायणः ॥ ३॥ निर्गु-

गो गुण संपन्न उग्रतपोधरस्तथा ॥ उत्तम कुल संजातो महामुनेनमोस्तुते ॥ ४ ॥

## अथेशान्यां कलश पूजनम्

अव्रणमकाल मूलवहिर्भागं दध्यत्तत पवित्र अश्वत्थादि पत्र संयुक्तं फल वस्त्र पूगीफल पंचरत्न संयुक्तं निर्मल जल पूर्णं कलशं ईशान्यां दिशि धान्ये परिस्थापयेत ॥

## अथ संक्षिप्त पूजन प्रकारः

ईशान्य में न फटे कालिमा रहित दधि अक्षत पवित्र अश्वत्थादि पत्र सुपारी पंचरत्न वस्त्र श्रीफल निर्मल जलपूर्ण कलश को धान्य पर रखे।

## अथ भूमिस्पर्शः

ॐ भूरासि भूमिरस्यादितिरासि विश्वधाया विश्वस्य भुवनस्यधात्री पृथिवींयच्छ पृथिवीदृᳫंह पृथिवीं माहिᳫंसीः ॥ धान्य स्पर्शः

ओं धान्य मसिधिनु हिदेवान् प्राणाय त्वोदा दानाय त्वाव्यानाय त्वादीर्घा मनुप्रसिति मायुषेधां देवोवः सविताहिरण्यपाणिः प्रतिगृह्णात्वछिद्रे णपाणिना चक्षुषे त्वा महीनां पयोसि ॥

---

१ विशेष पूजन विधान अन्यत्र देखें।

कलशंस्पृशेत् ॥

ॐ आजिघ्र कलशं मह्यात्वा विशंत्विदवः पुनरूर्जानिवर्तस्वसानः सहस्रं धुक्ष्वो रुधारा पयस्वती पुनर्मा विशताद्रयिः ॥ कलशेजलंक्षिपेत

ॐ वरुण स्योत्तंभनमसि वरुणस्य स्कंभ सर्जनीस्थो वरुणस्य ऋतसदन्यासि वरुणस्यऋत सदनमसिवरुणस्य ऋतसदनमासीद वरुणायनमः

श्वेतवस्त्रं धारयेत

ॐ सुजातो ज्योतिषासह शर्म वरूथमासदत्स्वः वासो अग्ने विश्वरूपꣳसंव्ययस्व विभावसो॥

॥ श्रीफलं धारयेत ॥

ॐ श्रीश्चते लक्ष्मीश्चपत्न्या वहोरात्रे पार्श्वे नक्षत्राणि रूपम ।श्विनौ व्यात्तम् । इष्णान्निषाणा मुंमइषाण सर्वलोकं मइषाण ॥ इति ॥

रक्त वस्त्र धारणम्

ॐ युवासुवासः परिवीत आगात् सउश्रेयान्भवाति जायमानः॥ तंधीरासःकवयःउन्नयंति स्वाध्यो मनसादेवयंतः ॥ इति ॥ कंकण वंधनम् ॥

ॐ यद्बद्धय सुदरस्यापवातियआमस्यक्रविषगंधो स्तिसुकृता तच्छ मितारः कृण्वन्तु तमेधꣳशतक्रतो ॥ इति ॥

कलशके पूर्वभागमें हाथ रखे ऋग्वेद को स्थापन करे

उँ अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजंहोतारं रत्नधातमम् ॥ दक्षिणे यजुर्वेदंस्थापयेत॥

उँ इषेत्वोर्ज्जेत्वा वायवस्थदेवोवः सविता प्रार्प्पयतु श्रेष्ठतमाय कर्मण आप्यायध्व मघ्न्या इंद्राय भागं प्रजावतीरनमीवा अयक्ष्मामा वस्तेनईशत माघशꣳ सोध्रुवा अस्मिन् गोपतौस्यात्त वह्वीर्यजमानस्य पशून्पाहि ॥ इति ॥

॥ पश्चिमे सामवेदं स्थापयेत् ॥

उँ अग्नआया हिवीतये गृणानो हव्य दातये निहोता सत्सु वर्हिषि ३

॥ उत्तरे अथर्ववेदंस्था पयेत

उँ शन्नो देवी रभीष्टय आपो भवंतु पीतये शंयो रभिस्रवंतुनः * ४

पुनः अक्षतानादाय प्रत्येकं कलशे तिलकं दत्वा नमस्कारैरक्षता दिभिः पूजयेत् ॥

उँ ऋग्वेदायनमः १ उँ यजुर्वेदायनमः २ उँ सामवेदायन० ३ उँ अथर्ववेदायन० ४ उँ कलशायनमः ५ उँ रुद्रायन० ६ उँ गंगायैनमः ७ उँ यमुनायैन० ८ उँ सरस्वत्यैन० उँ नर्म-

* इन ४ मन्त्रोंसे पृथक् चतुर्वेद पूजन कराना

दायैनमः १० इत्येकैकं संपूज्य कलशं पूजयेत् ॥ ओं तत्वायामि ब्रह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेड मानो वरुणो हवोध्युरुशꣳ समानआयुः प्रमोषीः ॥ अनेन पाद्यादिभिःसंपूज्य प्रार्थयेत ॥ ओं ब्राह्मणे निर्मितस्त्वं हिमांत्रिकैश्चामृतोपमैः ॥ प्रार्थयामिचत्वां कुंभवांछितार्थं प्रदेहिमे १ देवदानव संवादं मथ्य माने महो दधौ ॥ उत्पन्नो सितदा कुंभविधृतो विष्णुनास्वयम् २ त्वत्तोयेसर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ॥ त्वयिति ष्ठंतिभूतानि त्वयिप्राणाः प्रतिष्ठिताः ३

शिवः स्वयं त्वमेवासि विष्णुस्त्वंच प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वे देवाः सपैतृकाः ४ त्वयि तिष्ठंति सर्वेपियतः कामफलप्रदः ॥ त्वत्प्रसादादिमयज्ञं कर्तुमीहेजलोद्भव ॥ सान्निध्यं कुरुमे देव प्रसन्नो वरदो भव ५

## अथ कलशोत्पत्तिः

अथातः संप्रवक्ष्यामि कलश प्रसवो यथा ॥ हेमाद्रे रुत्तरे पार्श्वेक्षीरोदोत्तम सागरे १ प्रारब्धं मंथनं तत्र देवैः सर्वैः सवासवैः ॥ दानवैर्बलि

मुख्यैश्च बालिभिर्बलदर्पितैः २ मंथानं मन्दिरं कृत्वा नेत्रं कृत्वातुवासुकिम् ॥ मूले कूर्मंतुसं स्थाप्य विष्णोर्बाहू च मंदिरे ३ एकत्र देवताः सर्वे बलिनो दानवास्तथा ॥ मथ्यमाने तदा तस्मिन् क्षीरोदेदेव दानवैः ४ उदपद्यंत रत्नानि लोके स्मिन्प्रथितानिवै ॥ विमानं पुष्करंचैव उत्पन्नं हंसवाहनम् ५ नागऐरावतश्चैव वीणा वादित्रकं तथा ॥ स्वर्गस्य भूषणंचैव रंभा सर्व गुणान्विता ६ कौस्तुभं मणिरत्नंच वालचन्द्रस्त-स्थैवच ॥ कुंडलानि मखंचैव गावः पुण्याश्च उर्वशी ७ लक्ष्मीः सुरूपा सुभगा सुशीलाच सर-स्वती ॥ उच्चैःश्रवा हयश्चैव उत्पन्नंचा मृतंविषम् ८ धन्वंतरि धनुःशंखं पांचजन्यं सुदर्शनम् ॥ तत्र संस्थाप्यतं सर्वं विश्वकर्मा व्यचिन्तयत् ९ स्थापयित्वातु रत्नानि लोकेस्मिन्नथोसुरान् ॥ चिंतयित्वा बहुविधं धनमासाद्य निर्मलम् १० भूमौचाश्रम पूर्वाणि वासांसि भाजनानिच ॥ बहुवृक्षाणि रम्याणि सृज्यंते विश्वकर्मणा ११ कलशं कामरूपेण सर्वं संपत्ति कारकम् ॥ पठि-तव्यंच मांगल्ये यज्ञ काले विशेषतः १२ यजमान हितार्थाय कलशं स्थापयेद्बुधः ॥ सर्व देव मयं

कुम्भंतदेव कथयाम्यहम् १३ कलशस्य मुखे ब्रह्मा ललाटे वृषभध्वजः ॥ आदौमूलेस्थितो विष्णुर्मध्ये मातृगणास्तथा १४ कुक्षौवैसागराः सप्तचन्द्रभागासरस्वती ॥ कावेरी कृष्णवेणी च गंगाचैवमहानदी १५ तापी गोदावरी चैव नर्मदाचवहिष्कृता ॥ विंध्यपादे घृतानद्यः श्रीपर्वतवनाश्रिताः १६ वटेश्वरंत्रिमूर्तं च गंगासागर संगमे ॥ पृथिव्यां यानितीर्थानि कलशेऽस्मिन्न्यसे द्बुधः १७अत्र शांति प्रपुष्ट्यर्थं गायत्रीं चैव त्रिर्जपेत् ॥ ऋग्वेदश्चयजुर्वेदः सामवेद स्तथैवच १८ अथर्व संहिताःसर्वेकल शेऽस्मिन् समाश्रिताः॥ यत्फलं कपिलादाने कार्तिके ज्येष्ठ पुष्करे १९ तत्फलंलभ्यते सर्वं कलशोत्पत्ति पाठतः॥ ब्राह्मणो लभतेविद्यां पार्थिवोलभतेमहीम् २० वैश्यश्च लभतेलाभं शूद्रश्च गतिमुत्तमाम् ॥ वंध्याचलभते गर्भं पुत्रार्थी पुत्र मुत्तमम् २१ एतेनापिच मंत्रेणयः कुर्यादभिषेचनम् ॥ लभते वांछितं सर्वं लभेत्कामांश्च पुष्कलान् ॥ राजद्वारे भयं नैव सर्वबंध विमोचनम्॥ २२॥ इति०

---

१ यहांपर गायत्री पढ़ना

पुनः मन से सबको नमस्कार करे।

ॐ सूर्याद्यधिदेवप्रत्यधिदेवाताभ्यो नमः ॥ ॐ पंच लोकपालेभ्यो नमः ॥ ॐ धर्मराज चित्र गुप्ताभ्यां नमः ॥ ॐ संवत्सरादिवत्सरपंचकेभ्यो नमः ॥ ॐ वसन्ता दिषड्ऋतुभ्यो नमः ॥ ॐ चैत्रादि द्वादश मासेभ्यो नमः ॥ ॐ प्रतिपदादि तिथिभ्यो नमः ॥ ॐ रव्यादि सप्तवासरेभ्यो नमः ॥ ॐ अश्विन्यादि सप्तविंशति नक्षत्रेभ्यो नमः ॥ ॐ विष्कुंभादि अष्टा विंशति योगेभ्यो नमः ॥ ॐ ववादि एकादश करणेभ्यो नमः ॥ ॐ मेषादि द्वादश राशिभ्यो नमः ॥ ॐ सर्वेभ्यो देवेभ्यो नमः ॥ ॐ सर्वेभ्य स्तीर्थेभ्यो नमः ॥ ॐ पूर्णाः संतुमनोरथा ममामुकशर्मणोयजमानस्य—

इति ग्रहपूजनपद्धतिः समाप्ता



# अथ विवाह पद्धतिः

*तत्रादौ शुद्धासनो परिस्थितौ कन्यावरौ निरीक्ष्य कन्याप्रदो दक्षिण हस्त तर्जन्यंगुष्ठयोः मध्ये ताम्रमयीं दक्षिणांधृत्वा तद्धस्तं कन्योपरि धृत्वा वाचा बंधनं करोति ॥

अथवर्णः प्रणीयसे बलभद्रयसे देवग्रहस्य होमशान्तिच कारयेत् तस्मादिति सरतिद्दयं द्वि-जवर्यायतस्मै यथागौरीमो मधुपतिः ईश्वरोयश्च पतंगानां अश्वादीनां दासीनां प्रवालानां मान्यो भवति नहोराणां तस्यपर्जन्यस्यगौरी सौरिरिति

वाचा—ऐसे दाता कहे।

सुवाच वाचा—वर कहे।

ऐसे फिर भी दो बार दाता और वर कहें।

अथ कन्या प्रदआचार्यो वा कन्या मुपदिशाति ॥

दाता वा ब्राह्मण कन्या को उपदेश दे।

अवंध्ये ॥ आनंद वादिनी। जीवत्पुत्रवती। सत्यवादिनी। अनुत्तर वादिनीभव। पुरुषेण वाचं पालय—

---

* यह रीति हमारे देश की है। कन्या दाता कन्या वर को शुद्धासन पर देख कर दक्षिण हाथ की तर्जनी अंगुष्ठ के मध्य में दक्षिणा धारकर हाथ कन्या पर रख कर वाचा बंधन करे ॥

## पुनः वरं प्रत्युपदेशः

### फिर वर को उपदेश दें।

भो पुरुष कन्ययामातात्यज्यते पिता त्यज्यते कुटुंबस्त्यज्यते कस्यार्थेपत्युरर्थे–तद्यथा ॥ यथा इंद्रस्य इंद्राणी ॥ यथा गौतमस्य अहिल्या ॥ यथा दशरथस्य कौशल्या ॥ यथा रामस्य सीता ॥ यथा रावणस्य मंदोदरी ॥ यथा नलस्य दमयन्ती ॥ यथा र्जुनस्य सुभद्रा ॥ यथा भीमस्य हिडंवा ॥ यथाशंतनोर्गंगा ॥ यथा सूर्यस्य छाया ॥ यथा चंद्रस्यरोहिणी ॥ यथा वैश्वानरस्य स्वाहा ॥ यथा वनमालिनो लक्ष्मीः ॥ यथेश्वरस्यपार्वती ॥ एवंकर्मसहवाचा ब्रह्मवाचा विष्णुवाचा रुद्रवाचा वाचा विचाल्यते येन सुकृतं तेन हारितम् ॥ इति ॥

षडर्घ्या भवन्ति ॥ आचार्य्यः १ ऋत्विक् २ वैवाह्यः ३ राजा ४ प्रियः ५ स्नातकः ६ षट् ऋषयो भवन्ति। षडाचार्याश्च ॥ यथा ॥

प्रथमे ईश्वरेण गौरी विवाहिता ब्रह्मा आचार्योऽभवत् १ द्वितीये प्रजापतिना सावित्री विवाहिता गणपतिराचार्योऽभवत् २ तृतीये

१ यह लेख भी इस देश में प्रचलित होने से लिख दिया है।

